महादेव उवाच—

कृत्वा जाम्बवान्हृष्टः प्रणनामाथ दण्डवत् । परिणीय नमस्कृत्य विनयात्प्राह केशवम् ॥ २६

· जाम्बवानुवाच—

योऽस्मि कृतकृत्योऽस्मि तव संदर्शनात्प्रभो । दासोऽहं पूर्वभावेन तव देवकिनन्दन ॥ २७
वानसि गोविन्द कदनं पूर्वकाङ्क्षितम् । मयेदं कदनं मोहाद्यत्कृतं स्वामिना त्वया ॥
क्षम्यतां जगन्नाथ करुणाकर शाश्वत ॥ २८

महादेव उवाच—

युक्त्वा प्रणतो भूत्वा नमस्कृत्य पुनः पुनः । नानारत्नमये पीठे निवेश्य विनयात्प्रभुम् ॥२९
रदाब्जनिभौ पादौ प्रक्षाल्य शुभवारिणा । मधुपर्कविधानेन पूजयित्वा यदूद्वहम् ॥ ३०
राभरणैर्दिव्यैः पूजयित्वा विधानतः । पुत्रीं जाम्बवतीं नाम कन्यां लावण्यसंयुताम् ॥ ३१
यारत्नं [*ददौ तस्मै भार्यार्थममितौजसे । अन्यैश्च मणिमुख्यैश्च स्यमन्ताख्यं ददौ मणिम् ३२
वोद्वाह्य तां कन्यां प्रहृष्टः परवीरहा] । ददौ तस्मै वरां मुक्तिं प्रीत्या जाम्बवते हरिः ॥ ३३
त्वा तनयां तस्य कन्यां जाम्बवतीं मुदा । विनिर्गत्य बिलात्तस्मात्प्रययौ द्वारकां पुरीम् ३४
ाजिते ददौ रत्नं स्यमन्ताख्यं यदूत्तमः । दुहित्रे प्रददौ सोऽपि कन्यायै मणिमुत्तमम् ॥ ३५
सि भाद्रपदे शुक्ले चतुर्थ्यां चन्द्रदर्शनम् । मिथ्याभिदूषणं प्राहुस्तस्मात्तत्परिवर्जयेत् ॥ ३६
ाप्य दर्शनं तत्र चतुर्थ्यां शीतरश्मिनः । स्यमन्तस्य कथां श्रुत्वा मिथ्यावादात्प्रमुच्यते ॥३७
क्ष्मणां नाग्नजितीं सुशीलां च यशस्विनीम् । मद्रराजसुतास्तिस्रः कन्यकास्ताः शुभाननाः ३८
वरस्थास्ताः [+कृष्णं वरयामासुरुज्ज्वलाः । एकस्मिन्दिवसे तास्तु उपयेमे यदूद्वहः ॥ ३९
ौ महिष्यस्ताः सर्वा] रुक्मिण्याद्या महात्मनः । रुक्मिणी सत्यभामा च कालिन्दी च शुचिस्मिता
विन्दाजाम्बवतीनाग्नजित्यः सुलक्ष्मणा । सुशीला नाम तन्वङ्गी महिषी चाष्टमी स्मृता ॥ ४१
पुत्रो महावीर्यो नरको नाम राक्षसः । जित्वा देवपतिं शक्रं सर्वांश्चैव सुरान्रणे ॥ ४२
दित्या देवमातुश्च कुण्डले च सुवर्चसी । बलाज्जग्राह देवानां रत्नानि विविधानि च ॥ ४३
ावतं महेन्द्रस्य तथैवोच्चैःश्रवोहयम् । माणिक्यादि धनेशस्य शङ्खपद्मनिधिं तथा ॥ ४४
यश्चाप्सरसश्चैव हृतवान्क्षितिनन्दनः । वज्रादिहेतयश्चैव बलात्कृत्वा दिवौकसाम् ॥ ४५
स सुरान्हत्वा सभां मयविनिर्मिताम् । उवास व्योमगो दिव्यो नगर्यां विमलेऽम्बरे ॥ ४६
देवगणाः सर्वे पुरस्कृत्य शचीपतिम् । भयार्ताः शरणं जग्मुः कृष्णमक्लिष्टकारणम् ॥ ४७
णोऽपि तदुपश्रुत्य सर्वं नरकचेष्टितम् । देवानामभयं दत्त्वा वैनतेयं व्यचिन्तयत् ॥ ४८
मन्क्षणे हरेस्तस्य वैनतेयो महाबलः । प्राञ्जलिः पुरतस्तस्थौ सर्वदेवनमस्कृतः ॥ ४९
रुह्य द्विजश्रेष्ठं सत्यया सह केशवः । संस्तूयमानो मुनिभिः प्रययौ राक्षसालयम् ॥ ५०
प्यमानमाकाशे यथा सूर्यस्य मण्डलम् । राक्षसैर्बहुभिर्युक्तं दिव्यैराभरणैर्युतम् ॥ ५१
र्शी तत्पुरं कृष्णो दुर्भेद्यं त्रिदशैरपि । तदावरणानि भगवान्वीक्ष्य चक्रेण वीर्यवान् ॥ ५२

---

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. ञ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. कस्थः ।

१ ङ. °वानामापदं हन्तुं वै ।

चिच्छेद तेजसा दीप्त्या तमांसीव दिवाकरः । ततस्ते राक्षसाः सर्वे शतशोऽथ सहस्रशः ॥
उद्यम्य शूलांश्च तदा युद्धायाभिमुखं ययुः । ततस्तु तोमरैर्दिव्यैर्भिन्दिपालैः सपट्टिशैः ॥
केशवं ताडयामासू राक्षसा जयकाङ्क्षिणः । ततस्तु शार्ङ्गमादाय भगवान्गरुडध्वजः ॥
दिव्यशस्त्राणि चिच्छेद [*बाणैरग्निशिखोपमैः । तेषां शिरोधरा नागानश्वांश्चैव तरस्विनः
चक्रेणैव प्रचिच्छेद] वीर्यवान्पुरुषोत्तमः । केचिच्चक्रेण संछिन्नास्तथाऽन्ये शरताडिताः ॥
गदया निहताः केचिद्राक्षसास्तद्रणाजिरे । एवं ते राक्षसाः सर्वे पतिता धरणीतले ॥
शक्रोत्सृष्टेन वज्रेण निर्भिन्ना इव भूधराः । निहत्य दानवान्सर्वान्पुण्डरीकायतेक्षणः ॥
पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः । ततः स नरको दैत्यो धनुरादाय वीर्यवान् ॥
दिव्यं स्यन्दनमारुह्य ययौ युद्धाय केशवम् । तयोर्युद्धमभूद्घोरं तुमुलं लोमहर्षणम् ॥
बहुभिर्बाणसाहस्रैर्मेघयोरिव वर्षतोः । ततोऽर्धचन्द्रबाणेन वासुदेवः सनातनः ॥
तस्य राक्षसमुख्यस्य धनुश्चिच्छेद वीर्यवान् । ससर्जास्त्रं महादिव्यं नरकस्य महोरसि ॥
स तेन भिन्नहृदयः पपातोर्व्यां महासुरः । शक्रवज्रेण निर्भिन्नो महाचल इवोन्नदन् ॥
उपगम्य ततः कृष्णः समीपं तस्य रक्षसः । भूम्या संप्रार्थितः प्राह वरं वृणिवति राक्षसम्
स चाऽऽह राक्षसः कृष्णं गरुडोपरि संस्थितम् ॥

नरकासुर उवाच —

न मे कृत्यं वरेणास्ति नरकोऽहं तथाऽपि च । अन्यलोकहितार्थाय वृणेऽहं वरमुत्तमम् ॥
मृताहनि तु मे कृष्ण सर्वभूतेश्वरेश्वर । ये नरा मङ्गलस्नानं कुर्वन्ति मधुसूदन ॥
न तेषां निरयप्राप्तिर्भवत्वेवं भयापह ॥

महादेव उवाच

एवमस्त्विति गोविन्दो ददौ तस्मै वरं प्रभुः । ततः पश्यन्हरेः साक्षाच्छरदम्बुजसंनिभौ ॥
चरणौ वज्रवैदूर्यनूपुराभ्यां विराजितौ । अर्चितौ विधिरुद्राद्यैस्त्रिदशैर्मुनिभिस्तथा ॥
त्यक्त्वा प्राणान्महीपुत्रः सारूप्यमगमद्धरेः । ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ॥
ववृषुः पुष्पवर्षाणि तुष्टुवुश्च महर्षयः । प्रविश्य नगरं तस्य कृष्णः कमललोचनः ॥
बलात्तेन गृहीतानि धनानि त्रिदिवौकसाम् । कुण्डले देवमातुश्च तथैवोच्चैःश्रवोहयम् ॥
ऐरावतं गजश्रेष्ठं प्रदीप्तं मणिपर्वतम् । सर्वमेतद्यदुश्रेष्ठो ददौ शक्राय वज्रिणे ॥
पार्थिवान्सर्वराष्ट्रेभ्यो जित्वाऽसौ नरको बली । कन्याषोडशसाहस्रं हृतवान्स्वेन तेजसा ॥
संनिरुद्धास्तु ताः सर्वा नरकान्तःपुरे तदा । दृष्ट्वा कृष्णं महावीर्यं कंदर्पशतसंनिभम् ॥
भर्तारं चक्रिरे सर्वाः पतिं विश्वस्य सर्वगम् । एकस्मिन्नेव लग्ने तु गोविन्दोऽनन्तरूपवान् ॥
तासां करग्रहं चक्रे विधिना पुरुषोत्तमः । नरकस्य सुताः सर्वे पुरस्कृत्य महीं तदा ॥
गोविन्दं शरणं जग्मुस्तानरक्षद्घृणानिधिः । तद्राज्ये स्थाप्य तान्सर्वान्पृथिव्या वाक्यगौरवा
ऐन्द्रं विमानमारोप्य ताश्च सर्वा वरस्त्रियः । देवदूतैर्महाभागैर्द्वारवत्यां न्यवेशयत् ॥

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ झ. फ. °रैर्बाणैर्भि° । २ क. ज. झ. फ. °वं छादयामासुः पललैरिव पावकम् । त° । ३ झ. फ. °ान्भूतभादि° । ४ झ. महादीप्तं । ५ क. ज. झ. फ. रत्नानि । ६ ङ. एतस्मिन्नेव काले तु ।

यं समारुह्य सत्यया सह केशवः । स्वर्लोके प्रययौ तूर्णं द्रष्टुं तां देवमातरम् ॥ ८०
श्य नगरीं तत्र देवराजो जनार्दनः । अवरुह्य द्विजश्रेष्ठात्पत्न्या सह महाबलः ॥ ८१
द्दे मातरं तत्र वन्द्यां तां त्रिदिवौकसाम् । संपरिष्वज्य बाहुभ्यामदितिः पुत्रवत्सला ॥ ८२
श्याऽऽसनमुख्ये तु पूजयामास भक्तितः । आदित्या वसवो रुद्राः शतक्रतुपुरोगमाः ॥ ८३
संपूजयामासुर्यथार्हं परमेश्वरम् । शचीगृहं समागम्य सत्यभामा यशस्विनी ॥ ८४
समर्चिता देव्या समासीना सुखासने । तस्मिन्काले सुपुष्पाणि पारिजातस्य किंकराः ८५
। देव्यै ददुः प्रीत्या सहस्राक्षेण चोदिताः । प्रगृह्य तानि पुष्पाणि शचीदेवी सुमध्यमा ८६
निर्मलकेशे च बबन्ध स्वस्य मूर्धनि । अवमान्य तदा तत्र सत्यभामां यशस्विनीम् ॥ ८७
ह्री मानुषी चेयं देवार्हं कुसुमं शुभम् । इति कृत्वा मतिं तस्यै न ददौ कुसुमानि सा ॥ ८८
ष्क्रम्य गृहात्तस्मात्सत्या कोपसमन्विता । समेत्य कृष्णं भर्तारमुवाच कमलेक्षणा ॥ ८९

सत्योवाच—

शची यदुश्रेष्ठ पारिजातेन गर्विता । अदत्त्वा मम गोविन्द दधार स्वस्य मूर्धनि ॥ ९०

महादेव उवाच—

या भाषितं श्रुत्वा वासुदेवो महाबलः । उत्पाट्य पारिजातं तु निवेश्य गरुडोपरि ॥ ९१
ह्य सत्यया तूर्णं वैनतेयं महाबलम् । प्रययौ द्वारकां रम्यां नगरीं देवकीसुतः ॥ ९२
कोपसमाविष्टो देवराजः शतक्रतुः । रुद्रैर्वसुभिरादित्यैः साध्यैश्च मरुतां गणैः ॥ ९३
वतं समारुह्य ययौ युद्धाय केशवम् । ततो देवगणाः सर्वे परिवार्य जनार्दनम् ॥ ९४
ः शस्त्रवर्षाणि मेघा इव महाचलम् । कृष्णश्चिच्छेद चक्रेण तान्यस्त्राणि दिवौकसाम् ॥ ९५
यस्तु संक्रुद्धः पक्षपातेन वीर्यवान् । पातयामास तान्देवांस्तालानिव महानिलः ॥ ९६
क्रुद्धः सहस्राक्षो देवानामीश्वरः प्रभुः । मुमोच सहसा दीप्तं वज्रं कृष्णजिघांसया ॥ ९७
ह कृष्णस्तद्वज्रं हस्तेनैकेन लीलया । ततो भीतः सहस्राक्षो नागेन्द्रादवरुह्य सः ॥ ९८
लिः पुरतः स्थित्वा नमस्कृत्य जनार्दनम् । प्राह गद्गदया वाचा स्तुत्वा स्तुतिभिरेव च ९९

इन्द्र उवाच—

ग्यो ह्ययं कृष्ण पारिजातस्त्वया पुरा । दत्तो मम सुराणां च कथं स्थास्यति मानुषे १००

महादेव उवाच—

प्रोवाच भगवान्सहस्राक्षमुपस्थितम् ॥ १०१

कृष्ण उवाच—

ाऽवमानिता सत्या तव गेहे सुरेश्वर । अदत्त्वा पारिजातानि सत्यायै सा पुलोमजा ॥ १०२
मेव स्वशिरसि धारयामास ते प्रिया । अस्या निमित्तं देवेन्द्र पारिजातो हृतो मया ॥ १०३
प्रतिश्रुतं दत्तं मया सुरगणेश्वर । तव गेहे पारिजातं स्थापयामीति वासव ॥ १०४
ादद्य न दातव्यः पारिजातः सुरेश्वर । मानवानां हितार्थाय प्रापयिष्यामि भूतले ॥ १०५
तिष्ठतु देवेन्द्र पारिजातो ममाऽऽलये । मयि स्वर्गं गते शक्र गृहाण त्वं यथेच्छया ॥ १०६

महादेव उवाच—

उक्त्वा यदुश्रेष्ठस्तस्मै वज्रं ददौ स्वयम् । एवमस्त्विति गोविन्दं नमस्कृत्य स वज्रभृत् १०७

- ०जयामास । २ ङ. 'म्य पुरात्त' । ३ ङ. 'ता मुनिभि' । ४ क. ज. झ. फ. देवतानां । ५ झ. फ. पुनः ।

प्रययौ स्वपुरं दिव्यं सह देवगणैर्वृतः । कृष्णोऽपि सत्यया देव्या गरुडोपरिसंस्थितः ॥ १०
संस्तूयमानो मुनिभिर्द्वारवत्यां विवेश ह । सत्याया निकटे स्थाप्य पारिजातं सुरद्रुमम् ॥ १८
रमयामास भार्याभिः सर्वाभिः सर्वगो हरिः । निशासु तासां सर्वासां गेहेषु मधुसूदनः ॥
विश्वरूपधरः श्रीमानुवास स सुखप्रदः ॥ ११

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णचरिते वासुदेवविवाहादिचरितकथनं नाम षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७७८४

अथ सप्तसप्तत्यधिकद्विशततमोऽध्यायः ।

श्रीरुद्र उवाच—

रुक्मिण्यां कृष्णस्य प्रद्युम्नो मदनांशेन जज्ञे ॥

असौ मदनसंभूतो महाबलः शम्बरं जघ्निवान ॥

तस्य रुक्मिणः सुतायामनिरुद्धो जज्ञे ॥

सोऽपि बाणपुत्रीमुषां नाम कन्यामुपयेमे ॥

सा तु स्वप्ने नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणं महाबाहुं विचित्राभरणोपेतं षोडशवयस्कं रक्तारविन्दवक्त्रं [+यथावदुपभुज्य प्रबुध्य तं पुरतो न दृष्ट्वा मदनेन पीडिता भ्रान्तचित्ता मां त्यक्त्वा] वा(क्वा)सि क यासीति बहुधा विललाप ॥

ततस्तस्याः सखी चित्रलेखेति नाम कन्या तादृशीमवस्थां गतां विलोक्य किंनिमित्तं भ्रान्तचित्ताऽसीति पप्रच्छ ॥

साऽपि स्वप्नलब्धं पतिं यथावदाचष्ट ॥

साऽपि सकलदेवमानुषादिश्रेष्ठान्पटे विलिख्य तदस्यै दर्शयामास ॥

यदुवंशसंभूतान्कृष्णसंकर्षणादीन्प्रद्युम्नानिरुद्धादीनपि सम्यङ्निवेदयामास ॥

सा तेषां कृष्णमनुमाय प्रद्युम्नानन्तरमनिरुद्धं दृष्ट्वा स इत्येष इत्यालिलिङ्ग ॥

अथ चित्रलेखा बह्वीभिर्मायावतीभिर्दैत्यस्त्रीभिर्द्वारवतीं गत्वा रात्रावन्तःपुरे सुप्तमनिरुद्धं दृष्ट्वा गृहीत्वा मोहयित्वा बाणस्यान्तःपुरे चैत्य प्रासादे तस्या बाणपुत्र्याः शय्यायां चिक्षेप

सोऽपि प्रबुद्धोऽतिरम्ये श्लक्ष्णपर्यङ्के संस्थितामुषां सर्वलक्षणलक्षितां विचित्राभरणवासोगन्धमाल्यालंकृतां काञ्चनवर्णां सुकेशीं सुजातस्तनीं दृष्ट्वा गाढमालिङ्ग्य करिणीं गन्धहस्तीव मतिप्रीतिसंयुक्तां यथासुखं रमयामास ॥

एवं मासमात्रं निरन्तरं तयाऽनिरुद्धं रममाणं कदाचिदन्तःपुरनिवासिन्यो दैत्यवृद्धाः रि ज्ञात्वा राज्ञे निवेदयामासुः ॥

स राजा क्रोधताम्राक्षः परं विस्मयं गत्वा तमिहाऽऽनयतेत्युक्त्वा स्वकिंकरान्प्रेषयामास

तेऽपि तूर्णं नृपप्रासादमारुह्य राजपुत्र्याः शयने संस्थितमनिरुद्धं निग्रहीतुमाजग्मुः ॥

---

+ धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

र तान्समारब्धान्दृष्ट्वा प्रासादस्तम्भमेकं हेलयोत्पाट्य नियुतसंख्याकान्किंकरान्मुहूर्तमात्रेणैव
भेन चूर्णितगात्रांश्चकार ॥ १६
अथ दैत्यपतिर्निहतान्स्वकिंकरान्दृष्ट्वा कौतूहलं गत्वाऽसौ श्रीकृष्णपौत्र इति देवर्षिणा प्रोक्तो
ादाथ स्वयमेवानिरुद्धं ग्रहीतुं तत्समीपमाजगाम ॥ १७
अनिरुद्धोऽपि योद्धुमायान्तं सहस्रबाहुं राजानं दृष्ट्वा तत्परिघं भ्रामयित्वा बाणस्योपरि
प ॥ १८
अथ निर्मुक्तेन बाणेन तं परिघं चिच्छेद ॥ १९
अनन्तरमुरगास्त्रेणानिरुद्धं निविडं बद्ध्वा स्वान्तःपुरे निवेशयामास ॥ २०
अथ कृष्णोऽप्येवंविधमेव देवर्षिणा ज्ञात्वा बलदेवप्रद्युम्नसहितः स्वसेनया विहंगमेन्द्रमारुह्य
बाणस्य भुजवनं छेत्तुमाजगाम ॥ २१
ुरा बलिपुत्रेण शंकरोऽर्चितः प्रसन्नो वरं वृणीष्वेत्युवाच ॥ २२
ामीश्वरं बाणो मम पुरद्वारि [*रक्षार्थं सर्वदोपविश्य समागतं परसैन्यं जहीत्येवं वरमयाचत॥
ं तथेत्युक्त्वा शंकरोऽपि तस्य पुरद्वारि सायुधः] सपुत्रः सगणः समासीनस्तस्मिन्नेव काले
ादवसेनया समागतं वासुदेवं दृष्ट्वा वृषमारुह्य सर्वायुधोपेतः स्वपुत्रगणसंवृतो योद्धुं निश्च-
॥ २४
कृष्णोऽपि तं भूतपतिं गजचर्मकपालभस्मधरं ज्वलितोरगकल्पं पिङ्गलं त्रिलोचनं त्रिशूलधरं
ूतगणसंहतिकर्तारं सर्वभूतभयावहं संवर्ताग्निप्रभं पुत्रद्वयसमन्वितं समस्तगणावृतं त्रिपुरान्तकं
सेनां सुदूरे पृष्ठतो निवेश्य बलभद्रप्रद्युम्नसहितस्तेन रुद्रेण सह प्रहसन्निव योद्धुमारेभे॥२५
ं तदभूद्घोरं कृष्णशंकरयोस्तदा । पिनाकशार्ङ्गनिर्मुक्तैर्बाणैः संवर्तकोपमैः ॥ १
ऽपि गजवक्त्रेण प्रद्युम्नः षण्मुखेन च । युयुधाते महावीर्यौ सिंहाविव बलोत्कटौ ॥ २
ायकः स्वदन्तेन जघानोरसि यादवम् । रामो मुसलमादाय तस्य दन्तमताडयत् ॥ ३
भग्नदन्तः सहसा प्रदुद्रावाऽऽखुवाहनः । तदाप्रभृति लोकेऽस्मिन्दन्तभग्नो गणेश्वरः ॥ ४
ानवगन्धर्वैरेकदन्त इतीरितः । प्रद्युम्नेन समं युद्धं चकार शिखिवाहनः ॥ ५
ान्विद्रावयामास मुसलेन हलायुधः । कृष्णेन सुचिरं कालं युद्ध्वाऽसौ नीललोहितः ॥ ६
ज्वरं महादीप्तं तस्मिन्संयोज्य सायके । कोपान्मुमोच तमसौ भृशसंरक्तलोचनः ॥ ७
ं वारयामास कृष्णः शीतज्वरेण तु । ताभ्यां हरिहराभ्यां तु विसृष्टौ ताविमौ ज्वरौ ॥ ८
तुर्मानुषे लोके तयोरेवाऽऽज्ञया भृशम् । हरिशंकरयोर्युद्धं ये तु शृण्वन्ति मानवाः ॥ ९
र्वे ज्वरनिर्मुक्ताः प्राप्नुवन्ति निरामयम् । ततः स तु हृषीकेशो मोहनास्त्रं दुरासदम् ॥ १०
ज्य बाणे भूतेशे मुमोच मधुसूदनः । मुहुर्मुहुः प्रयोगेण तेनास्त्रेण विमोहितः ॥ ११
ा मूर्छितो भूमौ शंकरस्त्रिदशेश्वरः । पितरं मोहितं दृष्ट्वा शक्तिमुद्यम्य वीर्यवान् ॥ १२
ुमभ्याययौ कृष्णं षण्मुखः शिखिवाहनः । हुंकारेणैव तं कृष्णश्चकारात्र पराङ्मुखम् ॥ १३
जित्वा यदुश्रेष्ठः शूलपाणिं त्रिलोचनम् । महास्वनं पाञ्चजन्यं शङ्खं दध्मौ प्रतापवान् ॥ १४

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ क. ज. 'मुहुर्व्यजृम्भद्वै ते' ।

कृष्णेन निर्जितं श्रुत्वा सात्मजं शंकरं तदा । बाणः स्यन्दनमास्थाय ययौ युद्धाय केशवम् ॥
स दृष्ट्वा सहसा कृष्णं गरुडोपरिसंस्थितम् । छादयामास गोविन्दं बहुशस्त्रास्त्रवृष्टिभिः ॥
गदाभिः परिघैः शूलैः शक्तिभिस्तोमरैरपि । भिन्दिपालैश्च खड्गैश्च चक्रैर्बाणैर्निरन्तरम् ॥
तानि सर्वाणि चिच्छेद चक्रेणैव जनार्दनः । ससर्ज तस्य बाहूनां छेदनार्थं सुदर्शनम् ॥
[*मुक्तं दनुजराजस्य सहस्रारं सुदर्शनम्] । तद्बाहुकाननं तूर्णं छिन्नं चक्रे सहस्रधा ॥
एतस्मिन्नन्तरे देवि पार्वती संशितव्रता । हरेः समीपमागत्य कृताञ्जलिरभाषत ॥

पार्वत्युवाच—

कृष्ण कृष्ण जगन्नाथ नारायण दयानिधे । दास्यस्मि तव देवेश पूर्वभावे यदूत्तम ॥
त्वया दत्तं वरं मह्यं तदा[१] कौशलपर्वते । सौभाग्यं शाश्वतं सौम्य प्रसन्नेन महात्मना ॥
तव मुख्यं सहस्रस्य नाम्नामन्यतमं विभो । गौरीसौभाग्यदात्रिति मुनिभिः परिकीर्तितम् ॥
तत्सत्यं कुरु गोविन्द गरुडारूढ शाश्वत । तस्मान्मम पतिं देव त्वं जीवयितुमर्हसि ॥

रुद्र उवाच—

एवमुक्तस्ततो देव्या कृष्णः कमललोचनः । अस्त्रं संहारयामास येनासौ मोहितः पतिः ॥
कृष्णास्त्रेण विनिर्मुक्तः सर्वभूतपतिः शिवः । उत्थाय प्राञ्जलिर्भूत्वा तुष्टाव जगतां पतिम् ॥

शंकर उवाच—

कृष्ण कृष्ण जगन्नाथ भगवन्पुरुषोत्तम । परेश परमेशान अनादिनिधनाव्यय ॥
तीव्रवीर्य मनुष्येषु शरीरग्रहणात्मिका[२] । लीलेयं सृष्टसर्वस्य तव चेष्टोपलक्षणम् ॥
प्रसीद मे नमस्तुभ्यं प्रसीद मम शाश्वत । प्रसीद मे जगत्स्वामिन्प्रसीदाच्युत केशव ॥
त्वमेव जगतां स्रष्टा धाता हर्ता जगद्गुरुः । त्वमेव चिदचिद्वस्तु रूपं ब्रह्म सुरेश्वर ॥
त्वमादिस्त्वमनादिस्त्वमीश्वरस्येश एव च । त्वं महत्त्वं परं ब्रह्म प्रत्यगात्मा त्वमेव हि ॥
समस्तामरवर्यस्त्वममर्त्यस्त्वं सुरेश्वर । त्वं मर्त्येशः स्वयोनिस्त्वं सौशील्येन तव प्रभो ॥
तव श्वासात्समुत्पन्नौ परजीवौ सनातनौ । तथा पश्चापि भूतानि तव वात्सल्यगौरवात् ॥
क्षराक्षरे परे धाम्नि ऋचो नित्यं सुराश्रये । अधि विश्वे निषेदुस्त्वद्दास्यकर्मणि नान्यथा ॥
यस्त्वां न वेद लोकेऽस्मिन्स मूढः किं करिष्यति । ये वै त्वत्परमं धाम विदुर्दास्ये मनीषिण
ते वै समासते युक्तास्त्वत्पदे त्रिदशैः समम् । सामान्यो भजते दूरे न तु नित्यं पदं तव ॥
तस्य तुर्या चारुकेशी चावस्था घटने तव । मिथुनानि तवाध्यक्ष ब्रुवते यदुशाश्वत ॥
तव नामानि कर्माणि गुणानि शाश्वतानि च । ऐश्वर्याणि गुणातीत गुणिनो ब्रुवते इमे ॥
कर्मज्ञानमये रूपे इमे पूर्वोत्तरे श्रुते । स्वसारौ युवती प्रोक्ते स्तोतारौ तव केशव ॥
त्वं प्रज्ञानं परं ब्रह्म त्वया प्रज्ञेन शाश्वत । जीवयेतेन प्रज्ञेन परेणैवाऽऽत्मना त्वया ॥
तस्माच्छरीरादुत्क्रम्य कृपया तव केवलम् । आमुष्मिके परे स्वर्गे त्वया दत्तात्मबोधवान्
प्रज्ञानं चैव विज्ञानं मेधां[४] दृष्टिं तथा धृतिम् । सर्वान्कामानवाप्नोति अमृतं स भवेत्तदा ॥

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

१ झ. फ. °दा कैलासप° । २ ङ. °णात्मक । सर्वस्य तव चेष्टेयं मानलक्षणमेव तत् । प्र° । ३ झ. फ. हा
४ क. ज. °मेधा बुद्धिस्तथा धृतिः । स° ।

तसंज्ञानमाज्ञानं यदेतद्धृदयं मनः । मनीषा चैव युक्तिश्च स्मृतिः संकल्प एव च ॥ ४३
श्च क्रतवः कामो वेश इत्यादि ते प्रभो । भवन्ति नामधेयानि प्रज्ञानस्य घृणानिधे ॥ ४४
। त्वं परमं ब्रह्म एष त्वं वै प्रजापतिः । एष त्वमिन्द्रो रुद्रश्च एष त्वं सर्वदेवताः ॥ ४५
ानि सर्वभूतानि त्वमेव परमेश्वरे । सुतमित्राणि जीवायुस्तथाऽन्यानि सनातन ॥ ४६
ायुजाण्डजातानि स्वेदजान्युद्भिदानि च । अश्वा गावश्च पुरुषा हस्तिनश्चेतराणि च ॥ ४७
किंचित्प्राणिजातं च जङ्गमाश्चैव जन्तवः । स्थावरा ये च वै नाथ सर्वे त्वत्तो भवन्ति च ४८
हि सर्वगतं चेत्थं वदन्ति श्रुतयो हरे । त्वयैव प्रेरिता लोकाश्चेष्टन्ते साध्वसाधुषु ॥ ४९
ान्मया कृतं यच्च अपराद्धमिदं प्रभो । क्षमस्व करुणासिन्धो गुणैः शुभतमैस्तव ॥ ५०
स्ते पुण्डरीकाक्ष गोविन्दाच्युत माधव । वासुदेव जगद्वन्द्य नारायण नमोऽस्तु ते ॥ ५१
स्यामि जगत्स्वामिन्नृसिंह करुणाकर । श्रीश सर्वगत श्रीमन्परमात्मन्नमोऽस्तु ते ॥ ५२
ावसथ वैकुण्ठ नित्यमुक्तार्चित प्रभो । त्रयीनाथ नमस्तुभ्यं राम राजीवलोचन ॥ ५३
ारकविनाशाय कृष्णानन्दस्वरूपिणे । विष्णवे जिष्णवे तुभ्यं नमस्ते यदुनन्दन ॥ ५४

महादेव उवाच—

स्तुत्वाऽथ गोविन्दं प्रणिपत्य उमापतिः । प्राञ्जलिः प्राह भूतेशो वाक्यं गम्भीरया गिरा ५५

श्रीरुद्र उवाच—

ा दत्तवरो ह्येष बाणो बलिसुतः प्रभो । अहं च दत्तवानस्मै पुराऽनेनार्थितो वरम् ॥ ५६
रत्वं यदुश्रेष्ठ सर्वं कर्तुं त्वमर्हसि । तस्मादेनं बलिसुतं क्षन्तुमर्हसि मे प्रियम् ॥ ५७

महादेव उवाच—

त्युक्त्वा च भगवान्बाणं बलिसुतं तदा । प्राणसंशयमापन्नं छिन्नबाहुमसंकुचितम् ॥ ५८
त्य चक्रं गोविन्दो मुमोच करुणानिधिः । मोचयित्वा बलिसुतं शंकरः संशितव्रतः ॥ ५९
न्द्रं समारुह्य पार्वत्या सहितः प्रभुः । ययौ च वसतिस्थानं कैलासं धरणीधरम् ॥ ६०
तु बाणो नमस्कृत्य रामकृष्णौ महाबलौ । ताभ्यां वै नगरीं गत्वा मुमोच मदनात्मजम् ॥ ६१
राभरणैर्दिव्यैः पूजयित्वा यथार्हतः । उषां संप्रददौ तस्मै कृष्णपौत्राय शौरये ॥ ६२
ह्य रामकृष्णौ तमनिरुद्धं यथाविधि । बाणेन पूजितौ तत्र प्रद्युम्नसहितौ तदा ॥ ६३
ा सहितं तत्रानिरुद्धं वै जनार्दनः । आरोप्य स्यन्दने दिव्ये ययौ द्वारवतीं तदा ॥ ६४
प्रद्युम्नसहितः सेनया सहितो हरिः । प्रविवेश पुरीं रम्यां त्रिदशैर्मघवानिव ॥ ६५
रुद्धो बाणपुत्र्या नानारत्नमये गृहे । अनिशं रमयामास नानाभोगैर्मुदाऽन्वितः ॥ ६६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे बाणासुरसङ्ग्रामवर्णनं नाम सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७८८०

षा निश्चयश्चैव स्मृ° । २ ङ. दश । ३ झ. °र । क्षुद्राणि यानि मित्राणि तथा° । ४ झ. °तं त्रातुम° । ५ ङ.

अथाष्टमसत्यधिकद्विशततमोऽध्यायः ।

रुद्र उवाच—

अथ पौण्ड्रकवासुदेवः काशिराजो वाराणस्यां विविक्ते द्वादशवर्षं महेशमर्चयन्निराहारः पञ्चाक्षरं जजाप ॥

पौरश्चरणकाले शंकरं स्वनेत्रकमलेन पूजयामास ॥

ततः शूलपाणिरुमापतिः प्रसन्नो वरं वृणीष्वेति तमाह ॥

असौ पञ्चवक्त्रं सर्वभूतपतिं शिवं प्रसन्नं वरद मम वासुदेवसमानरूपं प्रयच्छेत्युवाच ॥

शिवस्तस्मै शङ्खचक्रगदापद्मयुतचतुर्भुजं पुण्डरीकदलनिभलोचनं किरीटमणिकुण्डलपीतवस्त्रकौस्तुभाभरणादिचिह्नान्यपि प्रददौ ॥

स तु वासुदेवोऽहमिति सर्वलोकान्मोहयामास ॥

कदाचिन्मदबलोत्कटं तं काशिपतिं नारदोऽभ्येत्य मूढ वसुदेवसुतं कृष्णमजित्वा तव वासुदेवत्वं न विद्यत इत्युवाच ॥

स तु तस्मिन्नेव क्षणे कृष्णं जेतुं गरुडपताकायुतं रथमारुह्य चतुरङ्गाक्षौहिणीबलेन द्वारकामव[...]

तत्र पुरद्वारि स्वर्णयाने [*संस्थितो वासुदेवोऽहं युद्धार्थं संप्राप्तोऽस्मि मामजित्वा तव वासुदेवत्वं नास्तीति दूतं प्रेषयामास ॥

कृष्णोऽपि तच्छ्रुत्वा वैनतेयमारुह्य पौण्ड्रकेण योद्धुं पुरद्वारि विनिष्क्रम्याक्षौहिणीबलेन स्यन्दने समासीनं शङ्खचक्रगदापद्महस्तं पौण्ड्रकं ददर्श ॥ १

अथ शार्ङ्गमादाय संवर्ताग्निप्रभैर्बाणैस्तस्य रथाश्वगजपदातियुतं महदक्षौहिणीबलं मुहूर्तमात्रेनिःशेषं ददाह ॥ १

शरेणैकेन तस्य हस्तावशक्त[+शङ्खचक्रगदादिहेतीरपि लीलयैव चिच्छेद ॥ १

पवित्रेण सुदर्शनेन किरीटकुण्डलयुतं तस्य शिरःकमलं छित्त्वा वाराणस्यामन्तःपुरे निपातयामास ॥ १

तद्दृष्ट्वा सर्वे काशीनिवासिनः किमेतदित्याशङ्क्य विस्मिता बभूवुः] ॥ १

तस्य पौण्ड्रकस्य सुतो दण्डपाणिरितीरितो वासुदेवेन भगवता निहतं स्वपितरं श्रुत्वा मार्कण्डेयमृत्युना समादिष्टः स्वपुरोहितेनाभियुक्तो माहेश्वरेण क्रतुना शंकरमियाज ॥ १

स तु प्रसन्नः कृष्णजिघांसया समर्थां माहेश्वरीं कृत्यां तस्मै संप्रीत्या दत्तवान् ॥ १

स काशिराजस्तां माहेश्वरीं ज्वालाकुलोपचितविग्रहां संदीप्तसटाकलापां पिङ्गलनेत्रां ज्वलत्करालवदनां त्रिशूलहस्तां भस्माङ्गरागलिप्तां नरशिरोमालाविभूषितां सर्वदेवभयंकरीं रुद्रदत्तां समीक्ष्य सपुत्रदारबान्धवसहितं कृष्णं जहीति प्रेरयामास ॥ १

सा तु सर्वलोकभयावहा सर्वां पृथ्वीं स्वतेजसा निर्दहन्ती प्रलयाशनिनिर्भरस्वनं निनदन्ती द्वारकामवाप ॥ १

तत्रस्थाः सर्वे जनास्तां दृष्ट्वा महाप्रलयमिति मत्वा हाहाकारं कुर्वन्तः कृष्णं [1]निवेदयामासुः

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ झ. शरणमाजग्मुः ।

कृष्णोऽपि तान्सर्वान्न भेतव्यमित्युक्त्वा पुरप्राकारतोरणे स्थितां महारौद्रां कृत्यां तथाविधां
। सकलशस्त्रास्त्रनिवारणसमर्थं सहस्रारं सुदर्शनं तस्यां कृत्यायां सहसा मुमोच ॥ २०
सा तु कल्पान्तार्ककोटिसमं वर्चसा शतयोजनोद्गनसकलदीप्तास्त्रयुतं हिरण्मयं प्रभापूर्णं सक
गत्प्रलयस्थितिसमर्थं सहस्रारं सर्वदेवनमस्कृतं जगच्छरणभूतं महासुदर्शनं विलोक्य विनष्ट-
। भयार्ता क्रोशन्ती वाराणसीं प्रति दुद्राव ॥ २१
सुदर्शनमपि तां कृत्यां भृशमन्वगात् ॥ २२
ऽपि भयार्ता क्रोशन्ती काशिपतेस्तस्यान्तःपुरं प्रविवेश ॥ २३
सुदर्शनोऽपि तां वाराणसीं पुरीं प्राप्य सभृत्यबलवाहनं पौण्ड्रकसुतं दण्डपाणिं नाम काशि-
जं बहुप्रासादहर्म्यमालिनीं पुरीं माहेश्वरीमपि भस्मावशेषं दग्ध्वा सकलदेवमहर्षिभिः पूज्य-
नः पुनरेव द्वारवत्यां कृष्णहस्तं सुसौम्यं कल्पमिव आविवेश ॥ २४
अत्र च श्लोका गीयन्ते—
त्रास्त्रमोक्षमजरं दग्ध्वा तद्बलमोजसा । कृत्यां भस्मावशेषं तां ततो वाराणसीं पुरीम् ॥ २५
तरथमातङ्गां साश्वां पुंस्त्रीसमन्विताम् । साशेषकोशकोष्ठां तां दुर्निरीक्षां सुरैरपि ॥ २६
रोपलक्षिताशेषगृहप्राकारचत्वराम् । प्रददाह हरेश्चक्रं सकलामेव तां पुरीम् (ततः) ॥ २७
क्षीणगतिसामर्थ्यमसाध्यतरसाधनम् । तच्चक्रं प्रसवद्दीप्ति विष्णोरभ्याययौ करम् ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते पौण्ड्रकपुत्रकृत्याविध्वंसनं नामाष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७९२०

अथोनाशीत्यधिकद्विशततमोऽध्यायः ।

श्रीरुद्र उवाच—

अथ मगधाधिपः कंसवधानन्तरं द्विषन्नेव यादवान्संपीडयामास ते दुःखिताः कृष्णमूचुः ॥ १
स च भीमार्जुनावाहूय मन्त्रयामास कृष्णोऽनेन रुद्रः पूजितस्तत्प्रसादाच्छस्त्रैरवध्यः परं
नापि प्रकारेण हन्तव्य इति ॥ २
अथ विचार्य भीममाह, एनं प्रति मल्लयुद्धं कुरु तत्तेन प्रतिज्ञातम् ॥ ३
अथ सकलचराचरजगद्वन्द्यो वासुदेवो भीमार्जुनसहितो जरासंधस्य पुरीं गत्वा विप्रवेषेण
स्यान्तःपुरमवाप ॥ ४
सोऽपि महावीर्यान्क्षत्रियान्युद्धे निर्जित्य बलाद्गृहीत्वा स्ववेश्मनि निरुध्य मासि मासि कृष्ण-
तुर्दश्यामेकैकं हत्वा तद्रक्तेनैव बलिं भैरवायाकरोत् ॥ ५
एवंविधसकलराष्ट्रजनपदपार्थिववधदीक्षां कुर्वतो जरासंधस्य भीमार्जुनसहितस्तस्य गृहं
प्रवेषेणैव प्रविवेश ॥ ६
स तु तान्दृष्ट्वा दण्डवत्प्रणतो भूत्वा यथोचितासनेषु निवेश्य मधुपर्कविधानेन संपूज्य धन्योऽस्मि,
तकृत्योऽस्मि किमर्थं [*भवन्तो मे समीपमागतास्तद्वक्तव्यमहं तत्सर्वं भवद्भ्यो दास्यामीत्युवाच

* धनश्चिह्नान्तर्गतः पाठः. झ. पुस्तकस्थः ।

तेषां वासुदेवः प्रहसन्पार्थिवं तमुवाच कृष्णभीमार्जुना युद्धार्थमागताः स्म, अस्माकमन्यत द्वंद्वयुद्धार्थं] वृणीष्वेत्यवदत् ॥

सोऽपि तथेत्यवदत्ततो द्वंद्वयुद्धाय मारुतिं वरयामास तयोर्भीमजरासंधयोरभितो भयंकरं मह युद्धं निरन्तरं पञ्चविंशतिवासरमभूत् ॥

ततः कृष्णेनैव संचोदितो वायुसूनुस्तस्य शरीरं द्विधाकृत्य भूमौ निपातयामास, एवं जर संधं पाण्डुपुत्रेण हत्वा ताञ्जरासंधनिरोधितान्वासुदेवोऽपि पार्थिवान्मोचयामास ॥ १

अत्र श्लोको गीयते—

निहत्य वायुपुत्रेण जरासंधं यदूद्वहः । तद्गृहे संनिरुद्धांस्तु मोचयामास पार्थिवान् ॥

ते च नमस्कृत्वा स्तुत्वा च मधुसूदनं स्वान्स्वाञ्जनपदान्सर्वे जग्मुः कृष्णेन रक्षिताः ॥

अथ ताभ्यामिन्द्रप्रस्थं गत्वा वासुदेवस्तत्र महाक्रतुं राजसूयं युधिष्ठिरं कारयामास ॥

तत्र समाप्ते क्रतावग्रपूजां भीष्मानुमतेन कृष्णाय दत्तवान् ॥

तत्र शिशुपालः कृष्णं बहून्याक्षेपवाक्यान्युक्तवान् ॥

कृष्णोऽपि सुदर्शनेन तस्य शिरश्चिच्छेद ॥

असौ जन्मत्रयावसाने हरेः सारूप्यमगमत् ॥

अथ शिशुपालं निहतं श्रुत्वा दन्तवक्रः कृष्णेन योद्धुं मथुरां जगाम ॥

कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन योद्धुं मथुरामाययौ ॥

तयोर्दन्तवक्त्रवासुदेवयोरहोरात्रं मथुरापुरद्वारि यमुनातीरे सङ्ग्रामः समवर्तत कृष्णस्तु ग तं जघान ॥

स तु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नमहीधर इव गतासुरवनितले पपात ॥

सोऽपि हरेः सायुज्यं योगिगम्यं नित्यानन्दसुखं शाश्वतं परमं पदमवाप ॥

इत्थं जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृताववतीर्य जन्मत्रये तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवाप्तौ ॥

कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य नन्दव्रजं गत्वा प्राक्तनौ पितरावभिवाद्याऽऽश्वास्य त साश्रुकण्ठमालिङ्गितः सकलगोपवृद्धान्प्रणम्याऽऽश्वास्य बहुरत्नवस्त्राभरणादिभिस्तत्रस्थान न्संतर्पयामास ॥

कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमावृते । गोपनारीभिरनिशं क्रीडयामास केशवः ॥

रम्यकेलिसुखेनैव गोपवेषधरो हरिः । बद्धप्रेमरसेनात्र मासद्वयमुवास ह ॥

अथ तत्रस्था नन्दगोपादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयश्च वासुदेव देन दिव्यरूपधरा विमानमारूढाः परमं वैकुण्ठलोकमवापुः ॥

कृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां परमं निरामयं स्वपदं दत्त्वा दिवि देवगणैः सं मानो द्वारवतीं श्रीमतीं विवेश ॥

तत्र वसुदेवोग्रसेनसंकर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिः प्रत्यहं संपूजितः षोडशसहस्रभाय

---

१ च. °रं समविं° ।

भिर्दिव्यमहिषीभिश्च विश्वरूपधरो दिव्यरत्नमयनानागृहान्तरेषु सुरतरुकुसुमाश्रितश्लक्ष्णतरप-
ःपु रमयामास ॥ २९
अथ रामकृष्णसतीर्थ्यो विप्रो बालसखा सदाऽत्यन्तदारिद्र्यपीडितो मुष्टिमात्रयाचनाप्तपृथु-
जीर्णवाससि निबध्य वासुदेवं द्रष्टुं श्रीमतीं द्वारकानगरीमाजगाम ॥ ३०
स तु रुक्मिण्यन्तःपुरद्वारि क्षणं तूष्णीं तस्थौ ॥ ३१
कृष्णोऽपि समागतं ब्राह्मणं ज्ञात्वा प्रत्युद्गम्य नमस्कृत्वा करं गृहीत्वा गृहान्तरे स्वासने
वेश्य भयाद्वेपमानं तं रुक्मिणीहस्तगतसुवर्णकलशजलेन पादौ प्रक्षाल्य मधुपर्केण पूजयामास ३२
सुधामृतोपमैरन्नपानाद्यैस्तर्पयित्वा तस्य जीर्णवस्त्रान्तरे याचनाप्तपृथुकान्स्वयमेव हस्तेन
ीत्वा प्रहसञ्जग्रास ॥ ३३
कृष्णेन [*पृथुके भक्षिते तस्मिन्नेव क्षणे तस्य बहुधनधान्यवस्त्राभरणसंभूतं महदैश्वर्यमभूत् ॥
स तु कृष्णेन] विसृष्टो मम किंचिद्वस्त्रं धनं वा कृष्णेन न दत्तमिति मन्यमानः स्वपुरं विवेश ३५
अथ बहुधनधान्ययुतं स्वगृहं दृष्ट्वा हरेः प्रसादादिदं लब्धमिति प्रहृष्टेनान्तरात्मना दिव्यव-
भरणादिना भार्यया सह सर्वान्कामान्भुक्त्वा हरिसंतुष्ट्यै बहुविधयज्ञानिष्ट्वा तत्प्रसादेन परमं
त्यं स्वर्गसुखमवाप ॥ ३६
अथ धृतराष्ट्रतनयो दुर्योधनः पाण्डुतनयान्कपटद्यूतव्याजेन राज्यमपहृत्य स्वराष्ट्राद्विवासया-
स ॥ ३७
तेन युधिष्ठिरभीमार्जुननकुलसहदेवाः स्वपत्न्या द्रौपद्या सह महारण्यं गत्वा तत्र द्वादशाब्दा-
स्थित्वा संवत्सरपर्यन्तमज्ञाताः सर्वे मत्स्यदेशाधिपतेर्विराटस्य निवेशने स्थित्वा वासुदेवेन
ायेन धार्तराष्ट्रान्योद्धुमाजग्मुः ॥ ३८
तेषां धार्तराष्ट्रपाण्डुपुत्राणां नानादेशाधिपनृपैः कुरुक्षेत्रे महापुण्ये देवानामपि भयंकरो महा-
ामोऽभवत् ॥ ३९
अथ श्रीकृष्णोऽप्यर्जुनसारथ्यं कुर्वन्नर्जुने स्वशक्तिमावेश्य तेन दुर्योधनभीष्मद्रोणप्रमुखान्स-
पार्थिवानेकादशाक्षौहिणीबलसहितान्कुरुक्षेत्रे हत्वा पाण्डवान्राज्ये स्थापयित्वा निःशेषेण
भूभारमपास्य स्वां पुरीं प्रविवेश ॥ ४०
कस्याचित्त्वथ कालस्य कतिपयाहनि(स्सु) वैदिको ब्राह्मणो मृतं पञ्चवार्षिकं बालमादाय
द्वारि निधाय बहुशो विलपन्बह्वन्याक्रोशवाक्यानि कृष्णं जगाद ॥ ४१
कृष्णस्तमाक्रोशं श्रुत्वा तूष्णीमुवास ॥ ४२
स तु मम पञ्च पुत्राः पूर्वं हता अयं तु षष्ठ एनं पुत्रं कृष्णो न जीवयिष्यति तर्हि राजद्वारि
ष्यामीत्युवाच ॥ ४३
तस्मिन्कालेऽर्जुनः कृष्णं द्रष्टुमागतस्तथाविधं तं पुत्रशोकेन विलपन्तं ददर्श ॥ ४४
अर्जुनोऽपि कालधर्ममुपागतं पञ्चवार्षिकं बालकं दृष्ट्वा कृपया समाविष्टस्तव पुत्रमहं जीवयि-
मीति ब्राह्मणायाभयं दत्त्वा प्रतिश्रुतवान् ॥ ४५
ब्राह्मणस्तु तेनाऽऽश्वासितो हृष्टवान् ॥ ४६

* धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

अथैतं ब्राह्मणशिशुं बहुभिः संजीवनास्त्रैरभिमन्त्र्यालब्धजीवितं दृष्ट्वा वृथाप्रतिज्ञामवा बहुशोकसमन्वितस्तेनैव प्राणांस्त्यक्तुमैच्छत् ॥

कृष्णस्तु तत्सर्वं ज्ञात्वाऽन्तःपुराद्विनिष्क्रम्य तं वैदिकं तव पुत्रान्सर्वानहं दास्यामीत्युक्त्वा श्वास्य वैनतेयमारुह्यार्जुनसहितो वैष्णवं लोकमाजगाम ॥

तत्र दिव्यमणिमण्डपोद्देशे देव्या सह समासीनं नारायणं दृष्ट्वा कृष्णार्जुनौ नमश्चक्रतुः ॥

स तौ बाहुभ्यां परिष्वज्य किमर्थमागतावित्युवाच ॥

कृष्णश्च भगवन्वैदिकस्य तनयान्मम देहीत्युवाच ॥

स तु नारायणस्तादृग्वयसि स्थितान्स्वलोकस्थितान्ब्राह्मणपुत्रान्कृष्णाय ददौ ॥

श्रीकृष्णोऽपि तान्वैनतेयस्कन्धे समारोप्य स हर्षसमन्वितोऽर्जुनसहितः स्वयमप्यारुह्य दि देवगणैः संस्तूयमानो द्वारवतीमाविवेश ॥

तस्मै ब्राह्मणाय पञ्चवर्षवयस्थान्षट्पुत्रान्ददौ सोऽप्यत्यन्तहर्षसमन्वितः कृष्णं वर्धस्वे शिषः प्रायच्छत् ॥

अर्जुनस्तु सफलप्रतिज्ञामवाप्य हर्षसमन्वितः कृष्णं नमस्कृत्य युधिष्ठिरपालितां स्वां जगाम ॥

कृष्णस्य षोडशसहस्रभार्यास्वयुतसाहस्रपुत्रा जज्ञिरे तेषां पुत्रपौत्रसंख्यां वक्तुं न शक्यते

अत्रापि श्लोकः—

अष्टौ शतानि पुत्राणां सहस्राण्ययुतं तथा । प्रद्युम्नः प्रथमस्तेषां सर्वेषां रुक्मिणीसुतः ॥

असंख्यैस्तैर्यादवैरियं पृथिवी संवृताऽभवत् ॥

पुनरप्यवनीभारशङ्कया कृष्णस्तु तानृषिशापव्याजेन संहर्तुमैच्छत् ॥

कदाचित्सर्वे कुमारा नर्मदायां विहर्तुमाजग्मुः ॥

तत्र तपन्तं कण्वं महर्षिं दृष्ट्वा जाम्बवत्याः पुत्रं योषिद्वेषं कृत्वा तस्योदरे कार्ष्णायसं बद्ध्वा शनैर्ऋषिसमीपमागत्य सर्वे नमस्कृत्वा स्त्रीरूपं साम्बं कुमारं तस्य पुरतो विधाय गर्भे स्त्री वा पुरुषो वा भविष्यतीति ब्रूहीत्यूचुः ॥

स तु मनसा तद्विज्ञाय तानमर्षमाणः सर्वाननेन मुसलेन यूयं सर्वे निहता भवतेत्युवाच

सर्वे समुद्विग्नमनसः कृष्णं समेत्य महर्षिणोक्तं तत्कर्म निवेदयामासुः ॥

कृष्णोऽपि तदायसं मुसलं चूर्णीभूतं ह्रदे निपातयामास ॥

तदयश्चूर्णीभूतबीजसमुद्भूता वज्रसंनिभा महाकाशाः संबभूवुः ॥

तत्र तं मुसलावशेषं कनिष्ठाङ्गुलिमात्रं मत्स्यो जग्राह तं मत्स्यं निषादो गृहीत्वा तद् मुसलावशेषमादाय बाणाग्रे फलकमकरोत् ॥

कदाचित्सर्वे यादवा रामकृष्णप्रद्युम्नादयो मघवता प्रेषितां वारुणीं पीत्वा मत्ता बभूवु

परस्परं वीरणं नीत्वा बहून्याक्रोशवाक्यानि वदन्तो युद्धं चक्रुः क्षयं च गताः ॥

कृष्णस्तु युद्धश्रान्तः कल्पतरुच्छायायां शयनं चकार स निषादो धनुर्बाणं गृहीत्वा कवृत्तिं जगाम ॥

---

१ अ. र्यास्ता अष्टायतं पत्राञ्जज्ञि । २ अ. अष्टायुतानि ।

एवं निःशेषं त्यक्तजीविता बभूवुस्ते सर्वे स्वान्स्वांस्त्रिदशान्प्रपेदिरे ॥ ७०
एवं मुसलेन संहृत्य सर्वं स्वयमेको देवो बहुगुल्मसमाकीर्णमहाद्रुमच्छायायां सुप्तश्चतुर्विध-
हृगतं वासुदेवात्मकमात्मानं चिन्तयञ्जानूपरि पदं निधायाऽऽत्मनो मानुषं वपुस्त्यक्तुमनुनिषसाद
एतस्मिन्नन्तरे मृगयाजीविको हरेः स तदा कालप्रभावेन चक्रवज्रध्वजाङ्कुशादिचिह्नितमति-
त्तमं पादकमलं दृष्ट्वा विव्याध ॥ ७२
तदनन्तरं श्रीकृष्णं ज्ञात्वा सुमहाभयार्तः प्रवेपमानः कृष्णं कृताञ्जलिपुटो महापराधः सक-
ऽपह्नियतामिति तं प्रणनाम ॥ ७३
श्रीकृष्णस्तथाभूतं दृष्ट्वा सुधामयकराभ्यां तमुत्थाप्य भवता नापराद्धं कृतमिति वदन्महाभ-
ीडितमाश्वासयन्नुवाच ॥ ७४
ततो योगिगम्यमपुनर्वर्तितं शाश्वतं सर्वोपनिषदमयं वैष्णवं लोकं प्रददौ ॥ ७५
असौ तस्मिन्नेव मुहूर्ते मानुषं रूपं विहाय पश्चोपनिषन्मयं सकलं च पुत्रदारसहितो दीप्तिम-
ष्णवं लोकं दिव्यं विमानमास्थाय सहस्रार्कद्युतिसहस्रकं दिव्याप्सरोगणाकीर्णं हिरण्मयं
देवेत्येकं जगाम ॥ ७६
स्मिन्काले दारुको रथमारुह्य विष्णोः समीपं विवेश। कृष्णोऽपि मत्स्वरूपमर्जुनं तूर्णमा-
ति प्रेषयामास ॥ ७७
स तु मनोजवस्यन्दनमारुह्यार्जुनसमीपमाजगाम ॥ ७८
एतस्मिन्नन्तरे देव्यर्जुनस्तदारुह्य परिणीय नमस्कृत्य किं करोमीति पुटाञ्जलिरुवाच ॥ ७९
कृष्णस्तु तमाह पार्थाहं स्वर्लोकं यास्यामि त्वं तु द्वारवतीं गत्वा तत्रस्था रुक्मिण्याद्यष्ट भार्या
नीय मम शरीरे प्रेषयेति ॥ ८०
स दारुकेण सहितो नगरीमाजगाम ॥ ८१
एतस्मिन्नन्तरे देवा विमानस्था नभसि संस्थिताः स्वर्लोकं यान्तं कृष्णं दृष्ट्वा ऋषिभिः सार्धं
वा पुष्पवर्षाणि ववृषुः ॥ ८२
कृष्णोऽपि मानुषं देहं संन्यस्य सकलजगत्स्थितिसंहारहेतुभूतं सकलक्षेत्रज्ञमन्तर्यामियोगिध्ये-
ामयं वासुदेवात्मकं देहं धृत्वा वैनतेयमारुह्य महर्षिभिः स्तूयमानो जगाम ॥ ८३
अर्जुनो वसुदेवोग्रसेनाभ्यां रुक्मिण्यादिमहिषीभ्यः सर्वं कथयामास ॥ ८४
च्छ्रुत्वा सर्वे पौरजनाः स्त्रियश्च द्वारवतीमुत्सृज्यान्तःपुराद्विनिष्क्रम्य सर्वास्ताः कृष्णव-
ा वसुदेवोग्रसेनार्जुनसहिताः शीघ्रमेव हरेः समीपमाजग्मुः ॥ ८५
सर्वे वसुदेवोग्रसेनाक्रूराः सर्वे यदुवृद्धा वपुस्त्यक्त्वा सनातनं वासुदेवं समाजग्मुः ॥ ८६
वती च बलभद्रशरीरं परिष्वज्याग्निं प्रविश्य तस्मिन्देहे प्राप्य दिव्यविमानारूढा भर्तुः स्थानं
णलोकं दिव्यमवाप ॥ ८७
थैव प्रद्युम्नेन सह रुक्मिपुत्री तथाऽनिरुद्धेनोषाऽपि सर्वाश्च यादवस्त्रियः स्वस्वभर्तुः शरी-
संपूज्याग्निप्रवेशं चक्रुः ॥ ८८
षां सर्वेषामर्जुन और्ध्वदेहिकं कृतवान् ॥ ८९

१ अ. लोक ज ।

तस्मिन्काले दिव्यवाजिसमायुक्तं सुग्रीवाख्यकं सर्वरत्नोपेतं दिव्यं स्यन्दनमारुह्य दारुकं
प्याजगाम ॥

पारिजाततरुर्देवसभा सुधर्मा त्रिदशेन्द्रलोकमयाताम् ॥

तस्मिन्समये द्वारवती पुरी महोदधौ निमग्नाऽभूत् ॥

ततः सर्वाः षोडशसहस्रभार्या अर्जुनेन सहेन्द्रप्रस्थं गच्छन्तीर्दस्यवो जगृहुः ॥

पूर्वं देवगन्धर्वयोषितो ह्यष्टावक्रं महामुनिं दृष्ट्वा जहसुस्ततस्तेन शप्ता वेश्या भविष्यथेति
स्ताभिः प्रसादितः पूजितश्च तत्प्रसादात्सर्वलोकैश्च नमस्कृतं वासुदेवं भर्तारमवाप्य तेनैव द
हस्तं गता अभवन् ॥

अर्जुनोऽपि दस्युभिर्निर्जितः शोकसमाविष्टो मम भुजबलं सवीर्यं कृष्णेनैव सह सर्वमैश्वर्यं निर्गतं
मत्वाऽद्य मम भाग्यक्षय इति वदन्सायंसंध्यागतरविरिव निःशेषविनष्टतेजाः स्वां पुरीं समाज

एवं हितार्थाय सर्वदेवानां समस्तभूभारविनाशाय यदुवंशेऽवतीर्य सकलराक्षसविनाशं कृ
महान्तमपि चोर्वीभारं नाशयित्वा नन्दव्रजद्वारकामथुरानिवासिनः सर्वान्स्थावरजङ्गमान्का
ववधैर्मोचयित्वा परमैश्वर्ये शाश्वते योगिगम्ये हिरण्मये रम्ये सात्त्विके संस्थाप्य नित्यं दि
महिष्यादिसंसेव्यमानो वासुदेव उवास ॥

अत्र श्लोकाः—

अन्ये सर्वेऽवताराः स्युः कृष्णस्य चरितं महत् । भूभारकविनाशाय प्रादुर्भूतो रमापतिः ॥
एतत्कृष्णस्य चरितं दुष्टानां नाशहेतवे । श्रीकृष्णः करुणासिन्धुर्वैकुण्ठे मोदते सदा ॥
अत्यद्भुतमिदं देवि कृष्णस्य चरितं शुभम् । संग्रहेण मयैवोक्तं तव सर्वफलप्रदम् ॥
वासुदेवस्य चरितं यः पठेद्धरिसंनिधौ । स्मरेद्वा शृणुयाद्वाऽपि स याति परमं पदम् ॥
महापातकयुक्तो वा उपपातकसंयुतः । बालकृष्णस्य चरितं श्रुत्वा पापैः प्रमुच्यते ॥
द्वारवत्यां समासीनं रुक्मिणीसहितं हरिम् । स्मरन्वै महदैश्वर्यमनेनाऽऽप्नोत्यसंशयम् ॥
सङ्ग्रामे संकटे दुर्गे शत्रुभिः परिवेष्टिते । नेतारं सर्वदेवानां ध्यात्वा स विजयी भवेत् ॥
यः स्मरेद्गोपकन्याभिः क्रीडन्तं गोव्रजे शुभे । सर्वकामानवाप्नोति सौभाग्यं चैव विन्दति ।
महोपसर्गरोगाद्यैर्युक्तो यस्तु सनातनम् । जेतारं च महारौद्रीं कृत्यां काशीपुरे स्थिताम् ॥
किमत्र बहुनोक्तेन सर्वकामफलस्पृहः । कृष्णाय नम इत्येवं मन्त्रमुच्चारयेद्बुधः ॥
कृष्णाय वासुदेवाय हरये परमात्मने । प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥
इमं मन्त्रं जपन्देवि भक्त्या प्रतिदिनं नरः । सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात् ॥
सर्वेषामेव देवानामीश्वरोऽसौ जनार्दनः । रक्षणाय च लोकानामवस्थान्तरमेति वै ॥
त्रिपुरं हन्तुकामेन मया संपूजितो हरिः । बुद्धरूपधरः श्रीमान्मोहयामास तद्रिपून् ॥
मोहितास्तेन शास्त्रेण सर्वधर्मविवर्जिताः । नारायणास्त्रेण मया निहता देवशत्रवः ॥
अवतीर्य कलावन्ते ब्राह्मणस्य निवेशने । हनिष्यति तथा रौद्रान्म्लेच्छान्सर्वाञ्जनार्दनः ।
एता वै वैभवावस्थाः सर्वाः प्रोक्ता जगत्पतेः । किमन्यच्छ्रोतुकामाऽसि तद्वदामि शुभानने

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते श्रीकृष्णस्वधामगमनानिरूपणं नामो-
नाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४८०७७

अथाशीत्यधिकद्विशततमोऽध्यायः ।

पार्वत्युवाच—

वन्सर्वमाख्यातं वैभवावस्थितं हरेः । एतस्मिन्रामकृष्णाभ्यां चरित्रमतिविस्मितम् ॥ १
. रामस्य चरितं कृष्णस्य च महात्मनः । शृण्वत्या मम देवेश कल्पान्तरशतैरपि ॥ २
। नोदेति भूतेश चेतो हरिकथां प्रति । अधुना श्रोतुमिच्छामि विष्णोर्माहात्म्यमुत्तमम् ॥
जनविधिं देव श्रोतुमिच्छाम्यहं तथा ॥ ३

रुद्र उवाच—

देवि प्रवक्ष्यामि हरेश्च सुमहात्मनः । स्थापनं च स्वयं व्यक्तं द्विविधं तत्प्रकीर्तितम् ॥ ४
ग्रामृद्दारुलोहाद्यैः कृत्वा प्रतिकृतिं हरेः । श्रौतस्मार्तागमप्रोक्तक्रियासंस्थापनं हि यत् ॥ ५
ापनमिति प्रोक्तं स्वयं व्यक्तं हि मे शृणु । यस्मिन्संनिहितो विष्णुः स्वयमेव नृणां भुवि ६
णदार्वोरात्मेशः स्वयं व्यक्तं हि तत्स्मृतम् । स्वयं व्यक्तं स्थापितं वा पूजयेन्मधुसूदनम् ७
ानां महर्षीणामर्चनार्थं सनातनः । स्वयमेव जगन्नाथः सांनिध्यं याति केशवः ॥ ८
यद्विग्रहे भोग्यं तदेवाऽऽविरभूद्भुवि । तदेव पूजयेन्नित्यं तस्मिन्नेव रमेत्सदा ॥ ९
ङ्गशायी देवेशो विध्यर्च्यश्च शुभानने । [*स एवेक्ष्वाकुनाथानां तपसाऽऽविरभूद्भुवि] ॥ १०
पि काश्यां संपूज्यो माधवः कलुषापहः । यत्र यत्र गृहे रम्ये स्वयं व्यक्तः सनातनः ॥ ११
तत्र समागम्य रमेऽहं संव्यवस्थितः । नाष्टाङ्गयोगे यज्ञेशस्त्वर्चायां विन्दते नृणाम् ॥ १२
पोविप्रयं प्राप्य ददाति वरमीप्सितम् । सर्वावस्थासु सौलभ्यमर्चायां लभ्यते जनैः ॥ १३
ानामपि सांनिध्यं सर्वदा पृथिवीतले । जम्बूद्वीपे महापुण्ये वर्षे वै भारते शुभे ॥ १४
र्यां संनिधौ विष्णुर्नेतरेषु कदाचन । तस्माद्वै भारते विष्णुर्मुनिभिस्त्रिदशैरपि ॥ १५
तः सततं देवि तपोयज्ञक्रियादिभिः । भारतेऽस्मिन्महावर्षे नित्यं संनिहितो हरिः ॥ १६
द्युम्ने तथा कौर्मे सिंहाद्रौ करवीरके । काश्यां प्रयागे सौम्ये च शालग्रामार्चने तथा ॥ १७
वत्यां नैमिषे च तथा बदरिकाश्रमे । कृतशौचे हरेत्पापं पौण्डरीके च दण्डके ॥ १८
रि वेङ्कटाद्रौ च श्वेताद्रौ गरुडाचले । काञ्च्यामनन्तशयने श्रीरङ्गे भैरवाचले[2] ॥ १९
ायणाचले सौम्ये वाराहे वामनाश्रमे । एवमाद्याः स्वयं व्यक्ताः सर्वकामफलप्रदाः ॥ २०
ामेव हि सांनिध्यं यस्मिन्याति जनार्दनः । तस्मिन्नेव स्वयं व्यक्तं वदन्ति मुनयः शुभाः २१
भागवतश्रेष्ठो विधिनाऽऽस्थाप्य केशवम् । मन्त्रेण कुर्यात्सांनिध्यं स्थापनं तद्विशिष्यते ॥ २२
मन्संपूजयेद्देवं ग्रामेषु च गृहेषु च । शालग्रामशिलायां तु गृहार्चा सद्भिरिष्यते ॥ २३
नं मन्त्रपठनं यागयोगो महात्मनः । नामसंकीर्तनं सेवा तच्चिह्नैरङ्कनं तथा ॥ २४
याराधनं च स्यान्नवधा भिद्यते शुभे । नवकर्मविधानं च विप्रस्य सततं स्मृतम् ॥ २५
भागवतश्रेष्ठो ब्राह्मणो वै गुरुर्नृणाम् । सर्वेषामेव लोकानामसौ पूज्यो यथा हरिः ॥ २६
ादिपञ्चसंस्कारी नवेज्याकर्मकारकः । अर्थपञ्चकविद्विप्रो महाभागवतः स्मृतः ॥ २७

---

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. ढ. पुस्तकस्थः ।

१ क. ज. सुरोत्तमः । २ क. ज. झ. फ. वासवाचले ।

तत्तत्कर्मविधानेज्या क्षत्रियस्य विधीयते । तच्चिह्नैरङ्कनं सेवा तदीयानां च पूजनम् ॥
मन्त्रवर्णस्य जपनं नामसंकीर्तनं तथा । वन्दनं च विशां प्रोक्तं षट्कर्मेज्या विधानतः ॥
नामसंकीर्तनं सेवा पूजनं वन्दनं तथा । अर्चनं च तदीयानां पञ्चेज्याः शूद्रजन्मनः ॥
साधारणा च सर्वेषां मानसेज्या नृणां प्रिये । स्वाधिकारानुरूपं च कार्या चेज्या जगत्पतेः
अनन्यदेवताभक्तैरनन्यफलसाधकैः । वेदविद्ब्रह्मतत्त्वज्ञैर्वीतरागैर्मुमुक्षुभिः ॥
गुरुभक्तिसमायुक्तैः सुप्रसन्नैः सुसाधुभिः । ब्राह्मणैरितरैश्चापि पूजनीयो हरिः सदा ॥
यथोचितं च वर्णस्य कार्या इज्या हरेर्नृणाम् । वर्णाश्रमानुरूपं च कर्तव्यं वैष्णवैः शुभैः ॥
श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत् । श्रुतिस्मृत्युक्तकर्माणि नातिक्रामेत बुद्धिमान् ।
श्रुतिस्मृत्युक्तमाचारं यो न सेवेत वैष्णवः । पञ्चपाषण्डमापन्नो रौरवे नरके वसेत् ॥
तस्माद्वर्णानुरूपां वै कुर्यादिज्यां जगत्पतेः । तस्मात्स्मृत्युक्तमाचारं कुर्याद्वै मानवः सदा ॥
साधारणा हि सर्वेषां मानसेज्या शुभे नृणाम् । स्वाधिकारं निरीक्ष्यैव कर्म कुर्यादतन्द्रितः ।
शमो दमस्तपः शौचं सत्यमामिषवर्जनम् । अस्तेयमेवाहिंसा च सर्वेषां धर्मसाधनम् ॥
तस्माद्वर्णानुरूपेण पूजयेन्मधुसूदनम् । रात्रावन्ते समुत्थाय ह्युपस्पृश्य यथाविधि ॥
नमस्कृत्य गुरून्स्वस्य संस्मरेदच्युतं हृदि । सहस्रनामभिर्भक्त्या कीर्तयेद्वाग्यतः शुचिः ॥
बहिर्ग्रामात्समुत्सृज्य मलमूत्रं यथाविधि । शौचं कृत्वा यथान्यायमाचम्य प्रयतः शुचिः ॥
दन्तधावनपूर्वं च स्नानं कुर्याद्यथाविधि । आदाय तुलसीमूलमृदं तत्पत्रसंयुताम् ॥
मूलमन्त्रेणाभिमन्त्र्य गायत्र्या च शुभानने । मन्त्रेणैवानुलिप्ताङ्गः स्नायात्कृत्वाऽघमर्षणम् ॥
हरिपादोद्भवां गङ्गां तस्या गत्वा सुनिर्मले । निमज्ज्याप्सु जपेत्सूक्तमघमर्षणमुत्तमम् ॥
आचम्य मार्जनं कुर्यात्पौरुषोक्तक्रमादथ । पश्चादप्सु निमज्ज्याथ मूलमन्त्रं जपेद्बुधः ॥
अष्टाविंशतिवारं वा शतमष्टोत्तरं तु वा । प्राशयेदभिमन्त्र्याथ जलं मन्त्रेण वैष्णवः ॥
आचम्य तर्पयेद्देवानृषींश्चैव पितॄंस्तथा । निष्पीड्य वस्त्रमाचम्य धौतवस्त्रेण वेष्टितः ॥
[+विमलां मृत्तिकां रम्यामादाय द्विजसत्तमः । मन्त्रेणैवाभिमन्त्र्याथ ललाटादिषु वैष्णवः॥]
धारयेदूर्ध्वपुण्ड्राणि यथासंख्यमतन्द्रितः । उपास्य विधिवत्संध्यां सावित्रीं च जपेद्बुधः ॥
संयतात्मा गृहं गत्वा पादौ प्रक्षाल्य वाग्यतः । आचम्यैकाग्रमनसा पूजामण्डपमाविशेत् ॥
रम्ये शुभदले पीठे प्रसूनेन च शोभिते । तस्मिन्निवेश्य देवं तं लक्ष्मीनारायणं प्रभुम् ॥
पूजयेद्विधिना सम्यग्गन्धपुष्पाक्षतादिभिः । स्थापने वा स्वयं व्यक्ते गृहार्चायां विधानतः
श्रौतस्मार्तागमोक्तानामर्चनं विधिना द्विजः । कुर्याद्भक्त्या यथार्हं च विष्णोः प्रयतमानसः
यथोपदिष्टं गुरुणा तथा कुर्वीत वैष्णवः । श्रौतं वैखानसं प्रोक्तं वासिष्ठं स्मार्तमुच्यते ॥
पञ्चरात्रविधानं यद्दिव्यागम इतीरितम् । क्रियालोपं न कर्तव्यं विष्णोराराधनं परम् ॥
आवाहनासनार्घ्याद्यैर्गन्धपुष्पाक्षतादिभिः । धूपदीपैश्च नैवेद्यैस्ताम्बूलाद्यैर्नमस्कृतैः ॥
कुर्यादाराधनं विष्णोर्यथाशक्ति मुदाऽन्वितः । प्रत्यृचं पुरुषसूक्तेन मूलमन्त्रेण वैष्णवः ॥

+ धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ झ. फ. नवकर्मविधानेज्या । २ ङ. झ. ञ. °ज्या कर्तव्या तस्य नित्यशः । त° । ३ झ. मन्त्ररत्नस्य । ४

द्वयेन कुर्वीत षोडशैरुपचारकैः । भूयः प्रत्युपचारेषु दद्यात्पुष्पाञ्जलिं ततः ॥ ५९
हयेज्जगन्नाथं मुद्रया चैव वैष्णवः] । आसनं तु तथा दद्यात्पुष्पकेण च मुद्रया ॥ ६०
र्घ्याचमनस्नानपात्रस्थैर्विमलैर्जलैः । मङ्गलद्रव्यसंयुक्तैस्तुलसीदलमिश्रितैः ॥ ६१
प्रत्युपचारं तु मूलमन्त्रद्वयेन च । सुवासितेन तैलेन कुर्यादभ्यञ्जनं ततः ॥ ६२
र्गा चन्दनेनापि कुर्यादुद्वर्तनादिकम् । सुगन्धवासितैस्तोयैः स्नाप्य मन्त्रयुतः शुभे ॥ ६३
भरणैर्दिव्यैरलंकृत्य यथाविधि । मधुपर्कं ततो दद्याद्गन्धं दद्यात्सुवासितम् ॥ ६४
णि सुपुष्पाणि भक्त्या सम्यङ्निवेदयेत् । धूपं दशाङ्गमष्टाङ्गं दीपं च सुमनोहरम् ॥ ६५
विविधं दद्यात्पायसापूपमिश्रितम् । सकर्पूरं सुताम्बूलं भक्त्या चैव निवेदयेत् ॥ ६६
रीराजनं कृत्वा पुष्पमालां समर्पयेत् । परिणीय प्रणम्याथ स्तुत्वा स्तोत्रैरनुत्तमैः ॥ ६७
ङ्के शाययित्वा मङ्गलार्घ्यं निवेदयेत् । संकीर्त्य नामभिः पुण्यैः पश्चाद्धोमं समाचरेत् ॥ ६८
वे...ेण जुहुयाद्वह्निमण्डले । प्रत्यृचं पौरुषं सूक्तं श्रीसूक्तं मङ्गलाह्वयम् ॥ ६९
...हविषा वैदिकानले । प्रोक्तेन मन्त्ररत्नेन जुहुयाद्दर्भसंयुतम् ॥ ७०
...विंशतिमेव वा । यज्ञरूपं महाविष्णुं ध्यायन्वै जुहुयाद्धविः ॥ ७१
जाम्बूनदनिभं शङ्खचक्रगदाधरम् । समस्तवेदवेदान्तसाङ्गोपाङ्गयुतं प्रभुम् ॥ ७२
श्रिया समासीनं ध्यात्वा होमं समाचरेत् । एकैकामाहुतिं पश्चान्नामभिर्जुहुयाद्धविः ॥ ७३
ान्भक्तान्समुद्दिश्य महाभागवतोत्तमः । भूलीलाविमलाद्याश्च शक्तयः प्रथमं क्रमात् ॥ ७४
न्ताविहगेन्द्रादिदेवतास्तदनन्तरम् । वासुदेवादयः पश्चात्तथा शक्त्यादिदेवताः ॥ ७५
ः केशवाद्याश्च तथा संकर्षणादयः । मत्स्यकूर्मादयश्चैव तथा चक्रादिहेतयः ॥ ७६
ादयश्च त्रिदशास्तथा चन्द्रादिदेवताः । इन्द्रादिलोकपालाश्च तथा धर्मादिदेवताः ॥ ७७
व्याः क्रमशस्तस्मिन्संपूज्याश्च विशेषतः[3] । एवं वैकुण्ठहोमं तु महाभागवतोत्तमः ॥ ७८
ार्चनविधौ नित्यं कुर्वीत सुसमाहितः । गृहार्चने गृहद्वारि पञ्चयज्ञविधानतः ॥ ७९
बलिं विधानेन पश्चादाचमनं चरेत् । उपविश्याऽऽसने शुभ्रे कृष्णाजिनकुशोत्तरे ॥ ८०
ागं प्रकुर्वीत भोगार्थं सुखमात्मनः । सम्यक्पद्मासनासीनो भूतशुद्धिं समाचरेत् ॥ ८१
ायामत्रयं कुर्यान्मन्त्रेण विजितेन्द्रियः । उदङ्मु(ऊर्ध्वमु)खं ततः कृत्वा हृत्पङ्कजमनुत्तमम् ८२
ासं तस्य कुर्वीत विज्ञानरविणा हृदि । तत्कर्णिकायां वह्न्यर्कशशिबिम्बान्यनुक्रमात् ॥ ८३
त्रयीमये तस्मिंश्चिन्तयेद्वैष्णवोत्तमः । नानारत्नमयं पीठं तेषामुपरि चिन्तयेत् ॥ ८४
न्हृत्पद्ममूलान्ते बालार्कसदृशद्युति । अष्टैश्वर्यदलं पद्मं मन्त्राक्षरमयं चरेत् ॥ ८५
न्देव्या समासीनं कोटिशीतांशुसंनिभम् । चतुर्भुजं सुन्दराङ्गं शङ्खचक्रगदाधरम् ॥ ८६
त्रविशालाक्षं सर्वलक्षणलक्षितम् । [+श्रीवत्सकौस्तुभोरस्कं पीतवस्त्रधरं प्रभुम् ॥ ८७
त्राभरणैर्युक्तं दिव्यमण्डनमण्डितम् । दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पोपशोभितम्] ॥ ८८
ीकोमलदलवनमालाविभूषितम् । बालार्ककोटिसदृशं कान्त्या देव्या श्रिया सह ॥ ८९

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

झ. भ. शुभैः । २ ङ. मङ्गलं । ३ क. ज. झ. फ. विधानतः । ४ झ. रम्ये । ५ ङ. मन्त्रयागं । ६ झ. ... पुस्तकान्तरे षा° ।

सर्वलक्षणलक्षण्या समाश्लिष्टतनुं शिवम् । एवं ध्यात्वा जपेन्मत्रं समाहितमनाः शुचिः ॥
सहस्रं शतवारं वा यथाशक्ति जपेन्मनुम् । मनसैवार्चनं कृत्वा विरमेत्तत्र भक्तितः ॥
तदीयानर्चयेद्भक्त्या तस्मिन्काले समागतान् । तर्पयित्वाऽन्नपानाद्यैरनुव्रज्य विसर्जयेत् ॥
अर्चयित्वा पितॄन्देवांस्तर्पयेच्च विधानतः । संपूज्यातिथिभृत्यांश्च भुञ्जीयातां च दंपती ॥
यक्षराक्षसभूतानामर्चनं वर्जयेत्सदा । यो महान्कुरुते विप्रः स चाण्डालो भवेद्ध्रुवम् ॥
यक्षाणां च पिशाचानां मद्यमांसभुजां तथा । दिवौकसां तु भजनं सुरापानसमं स्मृतम् ॥
ब्रह्मराक्षसवेतालयक्षभूतार्चनं नृणाम् । कुम्भीपाकमहाघोरनरकप्राप्तिसाधनम् ॥
कोटिजन्मकृतं पुण्यं यज्ञदानक्रियादिकम् । सद्यः सर्वं लयं याति यक्षभूतादिपूजनात् ॥
स्त्रियो वा पुरुषो वाऽपि यक्षभूतादिकार्चकः । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥
कृमिर्भूत्वाऽथ विष्ठायां पितृभिः सह मज्जति । यक्षाणां च पिशाचानां तामसानां दिवौक
निवेदितान्नं योऽश्नाति पूयशोणितभुग्भवेत् । [+यक्षान्भूतगणांश्चान्यान्क्रूरान्वै ब्रह्मराक्षसा
उद्दिश्य भुङ्क्ते यो विप्रः सद्यश्चाण्डाल एव सः । या नारी पूजयेद्यक्षान्पिशाचोरगराक्षसान्]
सा याति नरकं घोरं कालसूत्रमधोमुखी । पतिना सह कल्पान्त उषित्वा तत्र दारुणे ॥
लीढ्वा मूत्रपुरीषं वै कृच्छ्रात्सूचिमुखैस्तथा । कृमिभिर्भक्ष्यमाणाङ्गी यावदाभूतसंप्लवम् ॥
पश्चाद्भुवि दशार्हेषु जायते शतसंख्यया । तस्माद्यक्षादिकानां च देवानामर्चनं त्यजेत् ॥
[*स्वतन्त्रं पूजनं यत्र वैदिकानामपि त्यजेत्] । अर्चयित्वा जगद्वन्द्यं देवं नारायणं हरिम्
तदावरणसंस्थानं देवस्य परितोऽर्चयेत् । हरेर्भुक्तावशेषेण बलिं तेभ्यो विनिक्षिपेत् ॥
होमं चैव प्रकुर्वीत तच्छेषेणैव वैष्णवः । हरेर्निवेदितं सम्यग्देवेभ्यो जुहुयाद्धविः ॥
पितृभ्यश्चापि तद्दद्यात्सर्वं फलमवाप्नुयात् । प्राणिनां पीडनं यत्तद्विदुषां निरयाय वै ॥
अदत्तं यच्च यत्किंचित्परस्वं गृह्यते नरैः । स्तेयं तद्विद्धि गिरिजे नरकस्यैव कारणम् ॥
लशुनं मद्यपानादि मूलकं गृञ्जनं तथा । तिलपिष्टं तथा शिग्रुं बिल्वं कोशातकीं तथा ॥
अलाबुं श्वेतवृन्ताकं बीजानि कनकानि च । एवमन्यान्यभक्ष्याणि शास्त्रदृष्टानि वै नरः ॥
खादन्नरकमाप्नोति विचित्रमशिवं तथा । अवैष्णवानां यच्चान्नं पतितानां तथैव च ॥
अनर्पितं तथा विष्णोः श्वमांससदृशं भवेत् । यक्षराक्षसभूतान्नं सुरामद्यं च गृञ्जनम् ॥
योऽश्नाति निरयं याति पूयशोणितभोजनम् । [+एतैः संलापनस्पर्शसहवासादिभिर्नरः ॥
तेऽपि यान्त्येव निरयं विण्मूत्रक्रिमिभोजनम्] । पतितानां च संसर्गात्पाषण्डानां तथैव च
सर्वयज्ञस्य भोक्तारं पुराणं पुरुषोत्तमम् । ज्ञात्वा सर्वं प्रकुर्वीत नित्यनैमित्तिकीः क्रियाः ॥
यक्षराक्षसभूताश्च कूष्माण्डगणभैरवाः । नार्चनीयाः सदा देवि स्वर्गलोकमभीप्सुभिः ॥
यक्षराक्षसभूतानामर्चनं वर्जयेद्द्विजः । पैशाचत्वमवाप्नोति [*कल्पकोटिशतत्रयम् ॥
तस्माद्राक्षसभूतानामर्चनं प्रतिषिध्यते । कल्पकोटिसहस्राणि ]कल्पकोटिशतानि च ॥

---

+ धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । + धनु न्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ झ. यज्ञभू° । २ क. ज. पितृभिः । ३ ङ. झ. ञ. °णे । लिहन्मूत्र° । ४ झ. फ. °श्चाच्च विड्वराहेषु । ५ °स्मादवैदि° । ६ झ °तं चैव देवे° । ७ झ फ विण्मूत्रनिरयं महा । अ° ।

नरकं याति यक्षभूतगणार्चनात् । शङ्खचक्रादिभिश्चिह्नैरन्यैः प्रियतमैर्हरेः ॥ १२०
तः सर्वधर्मेभ्यः प्रच्युतो नरकं व्रजेत् । अगम्यागमनाद्धिंसापरद्रव्यापहारणात् ॥ १२१
क्ष्यभक्षणात्सद्यो [*नरकं समवाप्नुयात् । यस्तु पाणिगृहीतीं च हित्वाऽन्यां योषितं व्रजेत्॥
म्यागमनं तद्धि सद्यो] नरककारणम् । पतितानां च संसर्गात्पाषण्डानां तथैव च ॥ १२३
र्मस्थानां च तथा यात्येव निरयं नरः । संसर्गिणां च संसर्गं तत्संसर्गमपि त्यजेत् ॥ १२४
वः कुलमेकं तु वर्जयेत्पापसंयुतम् । एकान्ती संत्यजेद्ग्रामं महापातकमिश्रितम् ॥ १२५
परमैकान्ती तद्देशमपि वर्जयेत् । स्वकर्मज्ञानभक्त्यादि साधनं वैष्णवं स्मृतम् ॥ १२६
ज्ञानुरूपेण कर्मज्ञानादि यश्चरेत् । स एकान्ती भवेद्विप्रो वासुदेवपरायणः ॥ १२७
त्यं वैष्णवः पापं बुद्ध्या सम्यक्परित्यजेत् । एकान्ती संत्यजेच्छास्त्रं दूषणान्मनसाऽपि च॥
परमैकान्ती हेयबुद्ध्या परित्यजेत् । नित्यं नैमित्तिकं काम्यं कृत्यं तु त्रिविधं स्मृतम् १२९
तथैव लोकेऽस्मिन्मुनिभिः संप्रकीर्तितम् । कृत्याकृत्यविवेकं च परलोकस्य चिन्तनम् १३०
प्तिसाधनं विष्णोः स्वरूपज्ञानमेव च । भक्त्याऽन्वितो भवेद्भक्तो नवधा सा प्रकीर्तिता ॥
र्शनोर्ध्वपुण्ड्रादिसंचिह्नैरङ्कनं शुभे । सद्गुरोर्मन्त्रपठनमर्चनं विधिना हरेः ॥ १३२
णं कीर्तनं विष्णोः सेवा च परमात्मनः । प्रणामस्तस्य पुरतस्तदीयानां च पूजनम् ॥ १३३
दतीर्थसेवा च भक्तिर्नवविधा स्मृता । यस्मात्प्रपद्यते देवं शरणं वैष्णवो हरिम् ॥ १३४
त्तिः सा तु विज्ञेया त्रिविधा सा प्रकीर्तिता। [+तामसी राजसी चैव सात्त्विकी त्रिविधा स्मृता
ऽपि त्रिधा कृता सिद्धिः सामान्या सर्वदेहिनाम्। एतच्चतुष्टयं देवि हेयं] संत्यज्य वैष्णवः ॥
यभूतं ब्रह्मैवमवलम्बेत वैष्णवः । उपायभावात्संत्यज्य कर्मज्ञानादिकं नरः ॥ १३७
ीत भगवत्प्रीत्यै महाभागवतोत्तमः । त्रिकालमर्चयेद्विष्णुं भक्त्या वै पुरुषोत्तमम् ॥ १३८
मत्तिके विशेषेण पूजयेद्विधिना शुभे । प्रत्यहं कार्तिके मासि जातीपुष्पैः समर्चयेत् ॥ १३९
ादखण्डं दीपं च नियतात्मा दृढव्रतः । ब्राह्मणान्भोजयित्वाऽन्ते हरिसायुज्यमाप्नुयात् १४०
ुष्युषसि देवेशं मासमेकं निरन्तरम् । अर्चयेदुत्पलैर्देवि करवीरैः सितासितैः ॥ १४१
दीपैश्च नैवेद्यैर्यथाशक्ति निवेदयेत् । समाप्तौ भोजयेद्विप्रान्महाभागवतोत्तमान् ॥ १४२
श्वमेधसहस्रस्य फलमाप्नोत्यसंशयम् । तपोमास्युदिते भानौ स्नात्वा नद्यां विशेषतः ॥ १४३
र्चयेन्माधवं पुष्पैरुत्पलैश्च शुभानने । पायसं सघृतं दिव्यं भक्त्या तत्र निवेदयेत् ॥ १४४
*स्नात्वा संपूजयेद्विष्णुं मासमेकं निरन्तरम् । शर्कराम्बुयुतं नित्यमुपा(द्या)नं (?) विनिवेदयेत्॥
ष्णवान्पूजयेद्भक्त्या मासान्ते शुभदर्शने । मधुमासि तथा नित्यं बकुलैश्चम्पकैरपि ॥ १४६
र्चयेज्जगतामीशं गुडान्नं च निवेदयेत्] । मासान्ते वैष्णवान्विप्रान्भोजयेत्सुसमाहितः ॥ १४७
स्त्सवार्षिकीं पूजां प्रति नित्यमवाप्नुयात् । माधवं पूजयेद्देवं शतपत्रैर्महोत्पलैः ॥ १४८
जयित्वा विधानेन दध्यन्नफलसंयुतम् । गुडोदकं च भक्त्या वै तस्मिन्देवि निवेदयेत् ॥ १४९
क्ष्म्या युक्तो जगन्नाथः प्रीतो भवति पार्वति । शुक्रे तु शुक्लकमलैः पाटलैः कुमुदोत्पलैः १५०

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । * धनुश्चि-
ान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

१ झ. फ. शुभम् । २ क. ॰त्प्राप्त्यै म॰

अर्चयित्वा हृषीकेशमन्नं चूतफलैर्युतम् । निवेद्य च सुभक्त्या वै गवां कोटिप्रदो भवेत् ॥ १
वैष्णवान्भोजयित्वाऽथ सर्वमानन्त्यमाप्नुयात् । आषाढे देवदेवेशं लक्ष्मीभर्तारमच्युतम् ॥ १८
श्रीपुष्पैरर्चयेन्नित्यं पायसान्नं निवेदयेत् । मासान्ते भोजयेद्विप्रान्... .. तोत्तमान् ॥ १८
षष्टिवर्षसहस्रस्य पूजां प्राप्नोत्यसंशयः । नभोमास्यर्चयेद्विष्णुं पुंनागैः केतकीदलैः ॥ १८
अर्चयित्वाऽच्युतं भक्त्या न भूयो जन्मभाग्भवेत् । दद्यादपूपान्भक्त्याऽथ शर्कराघृतमिश्रित
ब्राह्मणान्भोजयेत्तद्वन्महाभागवतोत्तमान् । नभस्येऽप्यर्चयेदीशं कुन्दैः कुरबकैरपि ॥ १
क्षीरान्नं गुणसंमिश्रं भक्त्या तत्र निवेदयेत् । गवां कोटिप्रदानस्य प्रत्यहं फलमाप्नुयात् ॥ १
नीलोत्पलैरिषे मासि पूजयेन्मधुसूदनम् । भक्त्या निवेदयेत्तस्मिन्क्षीरमापूपमिश्रितम् ॥ १
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वैष्णवं लोकमाप्नोति मुदितः स्वजनैर्वृतः ॥ १
ऊर्जे मासि तथा देवि कोमलैस्तुलसीदलैः । पूजयित्वाऽच्युतं भक्त्या तत्सायुज्यमवाप्नुयात्
क्षीराज्यशर्करोपेतमिष्टान्नं पायसं तथा । अपूपं च क्रमेणैव भक्त्या सम्यङ्निवेदयेत् ॥
अमायां मन्दवारे च वैष्णवर्क्षे तथैव च । रविसंक्रमे व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ॥ १
विशेषेणार्चयेद्विष्णुं यथाशक्ति वरानने । गुरोरुत्क्रान्तिदिवसे जन्मर्क्षेषु तथा हरेः ॥ १
इष्टिं च वैष्णवीं कुर्याच्छक्त्या वै द्विजसत्तमः । दद्यात्पुष्पाञ्जलिं तत्र प्रत्यृचं वेदसंमितम् ॥ १
पारणं चापि कुर्वीत चरुणा पायसेन वा । वैष्णवान्भोजयेद्विप्राञ्शक्त्या दद्याच्च दक्षिणाम् १
कुलकोटिं समुद्धृत्य वैष्णवं पदमाप्नुयात् । सर्ववेदैरशक्तश्चेद्यष्टुं भागवतोत्तमः ॥ १८
वैष्णवैरनुवाकैर्वा सप्तरात्रं निरन्तरम् । पुष्पाञ्जलिसहस्रं तु [*होमं च प्रत्यहं चरेत् ॥ १८
प्रीतये वा भगवतः प्रतिश्लोकं यजेद्बुधः । अथार्चं(र्थे) मन्त्ररत्नं हि सप्तरात्रं निरन्तरम् १८
अष्टोत्तरसहस्रं तु] जुहुयाद्धविषा यजेत् । विशेषेणार्चयेद्विद्वान्महाभागवतोत्तमान् ॥ १८
अन्ते चावभृथं कुर्याद्यथाविभवसारतः । वैष्णवैरनुवाकैश्च कुर्यादवभृथं द्विजः ॥ १८
तत्र स्नात्वा विधानेन यथाशक्त्या(क्ति) द्विजोत्तमः । शुभे पात्रान्तरे रम्ये पादौ प्रक्षाल्य भक्ति
अर्चयेद्गन्धपुष्पाद्यैर्वस्त्रैराभरणादिभिः । ताम्बूलेन फलैर्वाऽपि यथाशक्त्या(क्ति) समर्चयेत् १
भोजयित्वाऽन्नपानाद्यैः प्रणम्य च पुनः पुनः । आसीमान्तमनुव्रज्य नमस्कृत्य विसर्जयेत् १
पुनः प्रणम्य भक्त्याऽथ शनैस्तत्र निवर्तितः । गृहं प्रविश्य देवेशं पूजयेत्प्रयतात्मवान् ॥ १
एवमभ्यर्चयेद्विष्णुं यावज्जीवमतन्द्रितः । तदीयांश्च विशेषेण पूजयेत्सर्वदा शुभे ॥ १
आराधनानां सर्वेषां विष्णोराराधनं [+परम् । तस्मात्परतरं देवि तदीयानां समर्चनम् ।
अर्चयित्वाऽथ गोविन्दं तदीयान्नार्चयेत्पुनः । न स भागवतो ज्ञेयः केवलं दाम्भिको हि
तस्मात्सर्वप्रयत्नेन वैष्णवान्पूजयेत्सदा । सर्वं तरति दुःखौघं महा]भागवतार्चनात् ॥
एवमुक्तं मया देवि विष्णोराराधनं परम् । नित्यनैमित्तिकं चैव तदीयानां च पूजनम् ॥

* धनुश्चिह्नान्तर्गतः पाठः क. ब. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. ञ. फ. पुस्तकस्थः

१ क. ज. झ. फ. °द्वत्सर्वमानन्त्यमाप्नुयात् । न° । २ फ. °थाभक्त्या व° । ३ ज. झ. °रोरक्षादिदि° ।

